कृष्णदास संस्कृत सीरीज २६७

महर्षिकृष्णद्वैपायनव्यासविरचितम्

# श्रीवायुमहापुराणम्

संस्कृत मूल, हिन्दी अनुवाद एवं श्लोकानुक्रमणिका सहित

सम्पादक एवं अनुवादक
डॉ. सुधाकर मालवीय एवं पं. चित्तरञ्जन मालवीय

( प्रथम भाग )

चौखम्बा कृष्णदास अकादमी, वाराणसी

कृष्णदास संस्कृत सीरीज
२९७
****

महर्षिकृष्णद्वैपायनव्यासविरचितम्

# श्रीवायुमहापुराणम्

## संस्कृत मूल, हिन्दी अनुवाद एवं श्लोकानुक्रमणिका सहित


सम्पादक एवं अनुवादक

**डॉ० सुधाकर मालवीय**

एम.ए., पीएच. डी., साहित्याचार्य
पूर्व विद्वान्, पुराण विभाग
काशिराजट्रस्ट, दुर्ग रामनगर, वाराणसी
(लब्धावकाश) संस्कृतविभाग, कलासङ्काय
काशी हिन्दू विश्वविद्यालय, वाराणसी

एवं

**पं० चित्तरञ्जन मालवीय**

रीडर पुराणविभाग
महामना संस्कृत अकादमी


**(प्रथम भाग)**

**चौखम्बा कृष्णदास अकादमी**

वाराणसी

KRISHNADAS SANSKRIT SERIES
297
***

# VĀYUMAHĀPURĀṆA

Sanskrit Text with Hindi Translation

*Translated by*
**Dr. Sudhakar Malaviya**
*&*
**Pt. Chittaranjan Malaviya**

**Vol. I**

CHOWKHAMBA KRISHNADAS ACADEMY
Varanasi

# भूमिका

**प्रथमं सर्वशास्त्राणां पुराणं ब्रह्मणा स्मृतम्** । (वा.पु. १.५४)

भारतवर्षस्य स्वरूपं वस्तुतोऽवगन्तुं प्राचीना ह्यस्य परम्परा: सम्यगवगाहनीया: । परम्पराश्चैता वेदेषु पुराणेषु इतिहासग्रन्थेषु च सुतरां निदर्शिता: सन्ति । तत्रापि वेदानां प्राचीनता सर्वप्रमाणसिद्धा । वैदिकं वाङ्मयमितिहासपुराणयो: साहाय्येनैवोपबृंहणीयमिति भूयो भूय: प्रतिपादितम् ।

**इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्** । (महा.भा. आदिपर्व १.६७-६८)

इतिहासवत्पुराणमपि लोकशिक्षाया: पद्धतिविशेष: । पद्धतिरियं विशालं जनसमूहं शिक्षयितुं प्रतिपादिता । यज्ञादिष्ववसरेषु पर्वसु तीर्थेषु वा स्वत: समुपस्थितं जनसमूहमुपदेष्टुमृषिभिरियं प्रणाली विकासिता । पुराणानां माध्यमेनाध्यात्मिकं वैज्ञानिकं च चिन्तनं सरलतया जनसामान्यं यावत् प्राप्स्यन्तिस्म मनीषिण: । निखिलमपि समाजं शिक्षयितुमियं प्रणाली अतीव प्राभाविकी जाता । एवं विद्यालयादिस्थापनमन्तरैव पुराणद्वारा लोकशिक्षणस्य स्थायी परम्परा भारतवर्षे स्थापिता । सा खलु युगेऽस्मिन् क्रमश: क्षीयत इत्यनुभूयते ।

पुराणेषु वर्णितानां घटनानां च सत्यासत्यविचारोऽनर्थक:, यतस्तेषां तत्र गौणता भवति । प्रतिपाद्यविषय एव मुख्य: । तमेव विषयं हृदयङ्गमयितुं विधिरयं पुराणस्य प्रतिपादित: । अत एवात्र परवर्तिनामपि जनानां क्वचिदुल्लेख: प्राप्यते । अपरत्र क्वचित् कल्पितानामपि कथानामुपवर्णनं प्राप्यते। पशूनां पक्षिणामपि तत्र जीवनं क्वचित् चित्रितं दृश्यते । अत: भावरूपेणैव सत्यता पुराणानामपेक्ष्यते न तु विषयरूपेण । अत एव पुरापि नवमिति पुराणस्य व्युत्पत्ति: संगच्छते ।

पुराणानां वर्ण्य विषय: सर्गप्रतिसर्गो वंशो मन्वन्तराणि वंशानुचरितमिति पञ्चात्मक: प्रसिद्ध:। प्रतिपाद्यं तु तेषां सर्वेषामध्यात्ममेव । निखिलमिदं जगत् परात्पररूपस्य परमेश्वरस्यैव स्थूलं शरीरम् । सर्वेष्वपि प्राणिषु चैतन्यं यदनुभूयते तदत्रैवाखिल ब्रह्माण्डव्यापिन: परमात्मन: स्वरूपम् । मनुष्यैरेव केवलै: शक्यते साक्षात्कर्तुं तत् । तदर्थमेव वेदानामवगम: पुराणानां च प्रादुर्भाव: सञ्जात: ।

पुराणानामाविर्भावस्तु वस्तुत: केनापि देवताविशेषेण न कृत: । महर्षिणा व्यासेन तु तेषां तु सम्पादनं कृतम् । अतएव स पुराणानां कर्ता रचयिता वा कथ्यते—

**अष्टादश पुराणानां कर्ता सत्यवती सुत:** । (मत्स्यमहापुराणम्)

महर्षेरस्य नामास्ति कृष्णद्वैपायन: । तस्यैव आख्या व्यास इति वेदानां चतुर्धा विभाजनात् जाता । व्यासेन चतुर्भ्य: शिष्येभ्य: वेदा उपदिष्टा: पैलादिभ्य: । सूताय लोमहर्षाय पुराणानि वर्णितानि । व्यासशिष्यात्

लोमहर्षणात् सूतात् नैमिषारण्ये शौनकादयो महर्षयो मुनयश्च पुराणानि जगृहुः । कदाचित् तस्य सूतस्य पुत्रः सौतिरपि पितुः सकाशाद् अधिगृह्य पुराणविद्या तमृषिभ्यो ग्राहयामास । अनन्तरं पौराणिकैरनेकैर्व्यासैः पुराणविद्येयं भारते निखिले प्रसारयामास । अतोऽद्यावधि पौराणिकाः व्यासपदेनाभिनन्द्यन्ते ।

वायुमहापुराणस्याविर्भावो वायुदेवेन शांशपायननामानमुनिं प्रति कृतः । तदेव पुराणं व्यासो महर्षिः सूतं लोमहर्षणम् अध्यापयामास । सूतोऽपि स्वपुत्रमध्यापयामास । तेनैव सूतपुत्रेणोग्रश्रवसा नैमिषारण्ये मुनीनामाग्रहात् तेभ्यः पुराणविद्येयं प्रकाशिता ।

पुराणस्यास्य गणना महापुराणेषु भवति । अत एवाध्यायानां पुष्पिकासु महापुराणे वायवीये इत्युपलभ्यते । पुराणानि प्रायः शैव-शाक्त-वैष्णवानि सन्ति । वायुमहापुराणं शैवपुराणेष्वन्यतमम् । अत्र महादेवस्य तावन्महिमा सर्वान् ब्रह्मविष्णुप्रभृतीन् देवानतिशय्य वर्णितः । निखिलस्यास्य चराचरात्मकस्य जगतो मूलं शिवात्मकमेव वस्त्वमत्र निगदितम्—

**नारायणं सर्वमिदं विश्वं व्याप्य प्रवर्तते ।**
**तस्यापि जगतः स्त्रष्टुः स्त्रष्टा देवो महेश्वरः ॥** (वा.पु. १।१८५)

भागवतादिपुराणेषु यस्य शैवपुराणस्य स्थानं पुराणानामाविर्भावक्रमेण चतुर्थं निर्धारितमस्ति। तदस्यैव वायवीयस्य कृते वर्तते इति नारददेवीभागवताग्निपुराणेषु सुष्ठु प्रतिपादितमस्ति । अत एवास्य महापुराणत्वं प्रसिद्धम् ।

वायुमहापुराणस्य त्रीणि संस्करणानि पूर्वं प्रकाशितानि आसन् । प्रथमन्येषु राजेन्द्रलाल मित्रेण सम्पादितं बंगीय ऐसियाटिक्सोसाइटी द्वारा १८८० तमे खिष्टाब्दे प्रकाशितम् । द्वितीयं पुनरानन्दाश्रमात् पुण्यपतनात् १९०५ तंमे खिष्टाब्दे प्रकाशितम् । तृतीयं तु संस्करणं कालिकातास्थगुरुमण्डलग्रन्थमालायां १८८०-८१ तमेऽब्दे प्रकाशितम् । अधुना तु क्षेमराजश्रीकृष्णदासद्वारा श्रीवेंकटेश्वरमुद्रणालयमुम्बापुरीस्थात् प्रकाशितमेव संस्करणसमुपलभ्यते ।

चतुर्विंशत् सहस्त्रपञ्चात्मकमासीत् पुराणमिदमिति यत्र क्वचनोल्लेखः । अन्यत्र द्वादशसहस्त्रात्मकमिति । प्रस्तुतेषु सर्वेष्वपि संस्करणेषु श्लोकसंख्या एकादशसहस्त्रप्रायैवोपलभ्यते ।

पुराणेस्मिन् भूगोलखगोलविद्ययोः यज्ञानां वेदाङ्गानां च वर्णनमतिविस्तृतमस्ति । मत्स्यब्रह्माण्डपुराणाभ्यामस्य पुराणस्य वर्ण्यविषयाणां साम्यं त्रिष्वपि एकरूपतां दरीदृश्यते । ब्रह्मपुराणेनास्य साम्यं तु पदे पदे परिलक्ष्यते । अतएवैकस्मादेव मुखात्युभयोः प्रसूतिरिति पार्जिटरप्रभृतिपुराणविद्याविदो मन्यन्ते । हाजरामहोदयानां तु न तत्सम्मतम् ।

वायुमहापुराणस्य प्रस्तुतस्य रचनाकालविषये विन्टरनित्समहाशयानामिदमेवमतं यदिदं पुराणेषु प्राचीनतमं स्थानं लभते । पुराणेऽस्मिन् समेषामेव प्रायेण तेषां विषयाणां वर्णनमुपलभ्यते येषां स्थितिर्महाभारतेऽस्ति । अतः डा० दीक्षितारमहोदयानां मतानुसारं खिष्टाब्दस्य पञ्चमशताब्द्याः प्रागेवास्य रचना कालो निर्धारणीयः । पुराणेऽस्मिन् वर्णनसामग्री त्रिभ्यः स्त्रोतोभ्यः परिगृहीता प्रतीयते ।

(१) समयदृष्ट्या वर्ण्य विषयदृष्ट्या च वैदिकवाङ्मयादतिप्राचीना सामग्री या संगृहीता सा तु नूनं ५०० ख्रिष्टाब्दापूर्वा ।

(२) पौराणिकी प्राचीना सामग्री धर्मसूत्रेभ्यः बौद्धजैन मूलग्रन्थेभ्यः कौटिल्यार्थशास्त्रात् मनुस्मृतेः महाभारतस्य च पूर्वरूपात् संगृहीता, यस्याः कालस्तु ख्रिष्टाब्दस्य प्रथमा शताब्दी ।

(३) या च सामग्री स्मृतिषु महाभारते च मुख्यतयोपलभ्यते तस्या अपि कालः ५०० ख्रिष्टाब्दं नातिक्रामति । एवं ५०० ख्रिष्टाब्दपूर्वात् ख्रिष्टाब्दस्य पञ्चम शताब्दियावत् पुराणस्यास्य परिवर्धनं जातम् । सप्तमशताब्द्यां बाणभट्टो वायुमहापुराणमुल्लिखति पाठ्यमानम् ।

वायुमहापुराणस्य प्रस्तुते संस्करणे एकादश सहस्रश्लोकाः पूर्वार्द्धे उत्तरार्द्धेचोपलभ्यन्ते । पूर्वार्द्धे एकषष्टि अध्यायाः सन्ति । उत्तरार्द्धे पुनः पञ्चाशदेव । एवं (१११) एकादशोत्तरशतमध्यायानामत्रोपलब्धिर्भवति । परम्परानुसारं पुराणेऽस्मिन् ११२ अध्याया उल्लिखिताः । ६१ अध्यायानन्तरं हिन्दी भाषायां परम्परानुसार-मध्यायानां संख्या ११२ पर्यन्तमुल्लिखितोऽस्ति । अध्यायानां पुनश्चतुर्षु पादेषु तत्तत्पादवर्ण्यविषयानुसारेण विभागः कृतः ।

तथा च वायुमहापुराणे प्रतिपादितः—

**प्रक्रिया प्रथमे पादे कथावस्तु परिग्रहः ।**
**अनुषङ्ग उपोद्घात उपसंहार एव च ॥** (वा.पु. उत्तरार्द्ध ४१.४४)

प्रथमे प्रक्रियानामके पादे षडेव अध्यायाः सन्ति । अत्र निम्न विषयाः प्रतिपादिताः—अनुक्रमणिकाकथनम्, द्वादशवार्षिकसत्रनिरूपणम्, सृष्टिप्रकरणम् । पादेऽस्मिन् ब्रह्माण्डरचना तथा सृष्टिप्रक्रिया वर्णिते स्तः । तत्र चराचरात्मकेऽस्मिन् ब्रह्माण्डे जीवस्योद्भवः प्रथमं कथं जात इति विस्तरेणात्र प्रतिपादितमस्ति ।

द्वितीये तु उपोद्घाताख्ये पादे सृष्टेः विशदः प्रकारः कल्पभेदा मन्वन्तराणि च वर्णितानि । अत्र निम्नलिखित विषयाः प्रतिपादिताः—प्रतिसन्धिकीर्त्तनम्, चतुराश्रमविभागः, देवादिसृष्टिवर्णनम्, मन्वन्तरादिवर्णनम्, पाशुपतयोगः, योगोपसर्गाः, योगैश्वर्याणि, पाशुपतयोगः, शौचाचारलक्षणम्, परमाश्रमप्राप्तिकथनम्, यति-प्रायश्चित्तविधिः, अरिष्टानि, ओङ्कारप्राप्तिलक्षणम्, कल्पनिरूपणम्, कल्पसंख्यानिरूपणम्, माहेश्वरावतारयोगः, शार्व्वस्तवः, मधुकैटभोत्पत्तिविनाशवर्णनम्, स्वरोत्पत्तिः, महादेवतनुवर्णनम्, ऋषिवंशवर्णनम्, अग्निवंशवर्णनम्, दक्षशापवर्णनम्, देववंशवर्णनम्, युगधर्माः, स्वायम्भुववंशवर्णनम्, जम्बूद्वीपवर्णनम्, पूर्व्वादिचतुर्दिग्विभागस्थसरः, शैलादिकीर्त्तनम्, शैलस्थितविविधदेवालयकीर्त्तनम्, देवकूटपर्व्वत मर्यादाकीर्त्तनम्, कैलासवर्णनम्, देवनदीवर्णनम्, केतुमालवर्णनम्, भारतवर्षवर्णनम्, किंपुरुषादिवर्षवर्णनम्, गङ्गावतारवर्णनम्, जम्बूद्वीपान्तर्वर्त्तिद्वीपवर्णनम्, प्लक्षद्वीपादिवर्णनम्, ज्योतिष्प्रचारः, ध्रुवचर्या, ज्योतिःसान्निवेशः, नीलकण्ठस्तवः, लिङ्गोद्भवस्तवः, पितृवर्णनम्, यज्ञप्रवर्त्तनम्, चतुर्युगाख्यानम्, ऋषिलक्षणम्, महास्थानतीर्थवर्णनम्, प्रजापतिवंशानुकीर्त्तनम्, (उत्तरार्द्धम्), पृथिवीदोहनम्, पृथुवंशानुकीर्त्तनम्, वैवस्वतसर्गवर्णनम् । अत्र सर्वमेतत् दक्षयज्ञप्रसङ्गेन महेश्वरमाहात्म्य-व्याजेनोपवर्णितमस्ति । पितृणां विशदं विवरणमृषीणाञ्च मूर्धन्यानामत्र समुल्लेखो वैदिकेनानुशासनेन सुतरां समुल्लसति ।

तृतीयेऽनुषङ्गनाम्नि पादे (उत्त० अ० ४.३७) सप्तर्षीणां तदपत्यगोत्राणां वर्णनपुरस्परं सृष्टेः विविधप्रकाराणां निरूपणं कृतम् । निम्नलिखित विषयाणामुल्लेखोऽत्र वर्तते । प्रजापतिवंशानुकीर्त्तनम्, काश्यपीयप्रजासर्गः, ऋषिवंशानुकीर्त्तनम्, श्राद्धप्राक्रियारम्भः, श्राद्धकल्पः, श्राद्धकल्पे ब्राह्मणपरीक्षा, श्राद्धकल्पे दानफलम्, तिथिविशेषे श्राद्धफलम्, नक्षत्रविशेषे श्राद्धफलवर्णनम्, भिन्नकालिकतृप्तिसाधनद्रव्य विशेषगयाश्राद्धादिफलकीर्त्तनम्, वरुण-वंशवर्णनम्, वैवस्वतमनोः सृष्टिकथनम्, वैवस्वतमनुवंशगान्धर्व्वमूर्च्छनालक्षणकथनम्, गीतालङ्कारनिर्देशः, वैवस्वतमनुवंशवर्णनम्, सोमोत्पत्तिः, चन्द्रवंशकीर्त्तनम्, तत्र रजियुद्धवर्णनम्, चन्द्रवंशकीर्तनम्, कार्त्तवीर्यार्जुनो-त्पत्तिविवरणम्, ज्यामघवृत्तान्तकथनम्, विष्णुवंशवर्णनम्, शम्भुस्तवकीर्तनम्, विष्णुमाहात्म्यकीर्त्तनम्, तुर्वस्वादि-वंशवर्णनम् ।

उपसंहारे चतुर्थे पादे (उत्तरार्द्ध अ. ३८-५०) भविष्यकालीन मन्वन्तराणामन्तरिक्षञ्च वर्णनम्, प्रतिसर्ग वर्णनम्, योगस्य माहात्म्यं वायुमहापुराणस्य परवर्तिव्यासाः वर्णिताः सन्ति । अत्र निम्नविषयाः प्रतिपादिताः— सप्त मन्वादिचतुर्द्दशमनुपर्यन्तानां विवरणम्, महर्लोकादिशिवपुरपर्य्यन्तविवरणम्, प्रलयादिपुनःसृष्टिविवरणम्, व्यासंसंशयापनोदनम्, गयामाहात्म्यमत्र अष्टसु अध्यायेषु प्रतिपादितः ।

संक्षेपतः पुराणेऽस्मिन् विविधानां विषयाणां वर्णनमुपलभ्यते । प्राचीन भारतस्य सामाजिकव्यवस्था, नाराणां स्थितिः, राजसंस्थाः, धर्मः दर्शनं च, भूगोलखगोलविद्ये, विविधाश्च परम्पराः सुतरामत्र निरूपिताः । पुराणस्यास्य भाषा न तथा सरला यथान्येषां पुराणानां प्रायेण भवति । स्थाने स्थाने भावाभिव्यक्तिर्जटिलाऽस्ति । अपाणिनीयप्रयोगाणां बाहुल्यमस्ति । छन्दः शास्त्रस्यापि परिपालनं न सम्यक् क्रियते ।

प्रस्तुतसंस्करणं श्री वेंकटेश्वरसंस्करणस्यैव छायानुग्राहि । तत्रस्थानामशुद्धीनां महतापरिश्रमेण संशोधनं हिन्दीञ्च कृत्वा संस्करणमिदं प्रकाश्यते । परिशिष्टरूपेण श्लोकानुक्रमणिकापि प्रस्तुता विदुषां पाठकानां सौकर्याय । एवमिदं संस्करणं विदुषां पाठकानाञ्च सर्वथा सन्तोषमावक्ष्यतीति संभावये ।

ग्रन्थस्यास्य पाठसम्पादनावसरे मम सुहृदः डॉ० महेशचन्द्रजोशी महोदयः परामर्शेन उपकृतवान् ।

अन्ते काशीस्थ चौखम्बा संस्कृत सीरीज आफिस संस्थाधिपतीनां दुर्लभप्राचीन संस्कृतग्रन्थरत्नानां प्रकाशने रतानां श्रीब्रजमोहनदास गुप्त एवं श्रीकमलेशकुमार गुप्तमहोदयानाम् आभारो मया हृदयेन स्वीक्रियते ।

**यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।**
**हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥** (गीता १२.१५)

रामनवमी २०८१

**विदुषां वशंवदः**
**डॉ. सुधाकर मालवीयः**
(लब्धावकाश) कला संकायस्य संस्कृत-विभागः,
काशी हिन्दू विश्वविद्यालयः
वाराणसी २२१००५

# आमुख

**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये । जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥**

वाक् में जिस प्रकार उसका अर्थ सम्पृक्त है उसी प्रकार सम्पृक्त जगत् के माता-पिता भगवती पार्वती एवं महेश्वर की मैं शब्द एवं उसके अर्थ की प्रतिपत्ति (ज्ञान) के लिए वन्दना करता हूँ ।

पुराण उन ग्रन्थों को कहते हैं जिनमें सर्ग अर्थात् ईश्वरीय सृष्टि, प्रतिसर्ग अर्थात् सृष्टि एवं प्रलय, वंश, मन्वन्तर, वंशानुचरित जैसे पाँच विषयों का समावेश रहता है ।

प्राय: सभो पुराणों में सर्ग अर्थात् सृष्टि का वर्णन मिलता है । सभी पुराणों में इस सम्पूर्ण पृथ्वी का विन्यास, ग्रह, उपग्रह, नक्षत्र एवं अखिल ब्रह्माण्ड का वर्णन एक सा ही मिलता है । जम्बू द्वीप, प्लक्ष द्वीप, शाल्मली द्वीप आदि सातों द्वीप एवं सात समुद्रों का वर्णन भी प्राय: सभी में मिलता है । इन द्वीपों के अन्तर्गत विभिन्न वर्षों का वर्णन, उनकी सीमाएँ और विस्तार आदि का वर्णन भी मिलता है, किन्तु इनका विस्तार प्रमाण आधुनिक परिमाणों से भिन्न है । इन देशों के निवासियों के आचार-विचार, स्वभाव, सभ्यता, रुचि एवं भौगोलिक स्थितियों का भी वर्णन है ।

प्राणवायु प्रदान करने वाले वायुदेवता इस वायुमहापुराण के वक्ता हैं । वायुप्रोक्त वायुमहापुराण दो भागों में विभक्त है । १. पूर्वार्द्ध और २. उत्तरार्द्ध । वायुप्रोक्त इस वायुमहापुराण में चार पाद हैं । १. प्रक्रियापाद (१-६ अध्याय), २. उपोद्घातपाद (७-६१ अध्याय एवं उत्तरार्द्ध का १-३ अध्याय), ३. अनुषङ्गपाद (उत्तरार्द्ध ४-३७ अध्याय), ४. उपसंहारपाद (उत्तरार्द्ध ३८-५० अध्याय) ।

वायुमहापुराण के प्रक्रियापाद में जगत् की प्रक्रिया का वर्णन है । दूसरे उपोद्घातपाद में जगत् के उपोद्घात कहे गए हैं । तीसरे अनुषङ्गपाद में आनुषङ्गिक ज्ञान की प्रस्तुति है । चौथे उपसंहारपाद में वायुमहापुराण का उपसंहार किया गया है । वायुमहापुराण में पूर्वार्द्ध में इकसठ अध्याय हैं और उत्तरार्द्ध में पचास अध्याय हैं । सम्पूर्ण वायुमहापुराण में एक सौ ग्यारह अध्याय हैं । देवीभागवत के अनुसार—**अयुतं वामनाख्यं च वायव्यं षट्शतानि च । चतुर्विंशतिसंख्यातः सहस्राणि तु शौनकः ॥** हे शौनक ! वामन पुराण में दस हजार एवं वायुमहापुराण में चौबीस हजार छः सौ श्लोक हैं ।

१. वायुमहापुराण के प्रथम अध्याय में सम्पूर्ण वायुमहापुराण की अनुक्रमणिका कही गई है । यह प्रथम अध्याय प्रक्रियापाद में ही है । प्रक्रियापाद में छः अध्याय हैं, जिनका विषय इस प्रकार है—वायुमहापुराण की अनुक्रमणिका, बारह वर्षों तक चलने वाले यज्ञ का निरूपण, प्रजापति की सृष्टि का वर्णन, प्राचीन ऋषियों की विचित्र सृष्टि का वर्णन, सृष्टिप्रकरण, सृष्टिप्रकरण ।

२. उपोद्घातपाद (७-उत्तरार्द्ध के तीन अध्याय) के विषय इस प्रकार हैं—कल्पों की प्रतिसन्धि का

वर्णन, चतुराश्रम विभाग वर्णन, देव आदि की सृष्टि का वर्णन, मन्वन्तरों का वर्णन, पाशुपतयोग निरूपण, योगोपसर्ग कथन, योगैश्वर्य निरूपण, पाशुपतयोग निरूपण, पाशुपतयोग निरूपण, शौचाचार लक्षण निरूपण, परमाश्रम विधि कथन, यति प्रायश्चित्त विधिकथन, अरिष्ट निरूपण, ओङ्कारप्राप्ति लक्षण निरूपण, कल्प निरूपण, कल्पसंख्यानिरूपण, माहेश्वरावतारयोग, शार्वस्तव, मधुकैटभोत्पत्तिविनाश वर्णन, स्वरोत्पत्ति निरूपण, महादेव के शरीर का वर्णन, ऋषिवंश कीर्त्तन, अग्निवंश वर्णन, दक्षशाप वर्णन, देववंश वर्णन, युगधर्म, स्वायम्भुव वंश वर्णन, जम्बूद्वीप वर्णन, भुवनविन्यास, ग्रह एवं नक्षत्रों का भ्रमण, ज्योति सन्निवेश, नीलकण्ठ की स्तुति, लिङ्गोद्भवस्तव, पितरों का वर्णन, यज्ञ वर्णन, चतुर्युग वर्णन, ऋषियों के लक्षण, महास्थानतीर्थवर्णन, प्रजापति के वंश का वर्णन, पृथिवी का दोहन, पृथु के वंश का वर्णन, वैवश्वत मन्वन्तर की सृष्टि का वर्णन।

३. अनुषङ्गपाद (उत्तरार्द्ध ४-३७ अध्याय) के विषय इस प्रकार हैं—प्रजापति के वंश का वर्णन, कश्यप ऋषि की प्रजा का वर्णन, कश्यप की प्रजा सृष्टि का वर्णन, कश्यप की सन्ततियों की सृष्टि का वर्णन, कश्यप ऋषि की प्रजा सृष्टि, ऋषि वंश का वर्णन, श्राद्ध की प्रक्रिया, श्राद्ध कल्प का वर्णन, श्राद्ध कल्प में तीर्थयात्रा, श्राद्ध कल्प में दान का फल, विशेष तिथि में श्राद्ध का फल, विशेष नक्षत्रों में श्राद्ध का फल, गया श्राद्ध का फल, वरुणवंश वर्णन, वैवस्वतमनुवंश वर्णन के प्रसङ्ग में गन्धर्वों की मूर्च्छना, गीतालङ्कार वर्णन, वैवस्वतमनुवंश के अन्तर्गत मैथिलवंश का वर्णन, चन्द्रमा का जन्म वृत्तान्त, चन्द्रवंश का वर्णन, रजियुद्धवर्णन, ययातिप्रसव कीर्त्तन, कार्तवीर्यार्जुनोत्पत्ति वर्णन, ज्यामघ वृत्तान्त वर्णन, विष्णुवंश वर्णन, विष्णुमाहात्म्य वर्णन, विष्णुमाहात्म्य वर्णन, ययाति के पुत्रों का वंशवर्णन।

४. उपसंहारपाद (उत्तरार्द्ध ३८-५० अध्याय) के विषय इस प्रकार हैं—मन्वन्तरों का वर्णन, भूर्लोक आदि की व्यवस्था एवं शिवपुर का वर्णन, प्रतिसर्ग वर्णन, सृष्टिवर्णन, व्यासजी की सन्देह निवृत्ति का वर्णन और गया माहात्म्य वर्णन ४३-५० आठ अध्यायों में है। वायुमहापुराण में जैसा गया माहात्म्य कहा गया है वैसा सम्पूर्ण पुराण साहित्य में नहीं है।

यह पुराण भारतवर्ष को जम्बू द्वीप का मध्य स्थान मानता है। वायुमहापुराण में भारतवर्ष के नव भेद कहे गए हैं। जो समुद्र से घिरे हुए और परस्पर अगम्य हैं। उनमें यह भारतवर्ष, जो कुमारी अन्तरीप (कन्याकुमारी) से लेकर गंगोत्री तक फैला हुआ है, नवाँ वर्ष है। यह कहकर वायुमहापुराण में भारतवर्ष के अन्य आठ विभाग बतलाते हैं। इन आठों की सीमा क्या है, यह यहाँ नहीं कही गई है। प्राचीन काल में भारतवर्ष की सीमा और बृहत्तर भारत की भौगोलिक स्थिति आज से कुछ भिन्न थी। भारतवर्ष की नदियों, पर्वतों और प्रान्तों के वर्णनों को देखकर समग्र भारतवर्ष के भौगोलिक ज्ञान का पता चलता है। हिमालय से लेकर दक्षिण के सह्याद्रि, मलय पर्वत, नीलगिरि, मध्य के विन्ध्य, श्रीशैल आदि पर्वतों और सिन्धु, सरस्वती, शतद्रु, विपाशा, वितस्ता, गङ्गा, यमुना, सरयू, गण्डकी, इरावती, कोसी (कौशिकी), इच्छु, लोहित अर्थात् ब्रह्मपुत्र आदि उत्तर की हिमालय से निकलने वाली नदियों और विदिशा, वेत्रवती अर्थात् बेतवा, महानद शोण (सोन) आदि विन्ध्य से निकलने वाली नदियों, गोदावरी, कृष्णा, तुङ्गभद्रा, भीमरथी, सुप्रयोगा, कावेरी आदि दक्षिणापथ की सह्य पर्वत के पाद से निकली नदियों का वर्णन कर विशाल भारत के भौगोलिक एवं सांस्कृतिक एकता का परिचय दिया है। इन नदियों को वायुमहापुराण में—**विश्वस्य मातरः सर्वाः जगत् पापहरा स्मृताः ॥** यह कहकर सूतजी ने प्राचीन भारतीयों की प्रकृति के प्रति अगाध प्रेम एवं श्रद्धा का वर्णन किया है।

भारतवर्ष के प्रान्तों के वर्णन प्रसङ्ग में कुरु, पाञ्चाल, शाल्व, सजाङ्गल, भद्रकार, वत्स, किसण्णा, कुल्य, कुन्तल, काशी, कोशल, तिलङ्ग एवं मगध आदि देशों को यहाँ मध्य देश कहा गया है। उत्तर देशों की नामावली में वाल्हीक, वाटधान, आभीर, तोयक, पल्हव, गान्धार, यवन, सिन्धु, सौवीर, शक्र, सृद, केकय आदि क्षत्रिय जाति के उपनिवेश थे। काम्बोज, दरद, बर्बर, चीन, तुषार, काश्मीर, तङ्गण आदि देशों का यहाँ नाम लिया गया है।

वायुमहापुराण में ऋषि वंश, इच्छ्वाकुवंश और पुरुवंश के वर्णन से वैदिक काल से लेकर पुराण काल तक के राजाओं एवं ऋषियों की परम्पराओं का वर्णन प्राप्त होता है। अर्जुन की वंश परम्परा का वर्णन भविष्यकथन के रूप में किया गया है जो गौतम बुद्ध के समकालीन थे। इस प्रकार गौतम बुद्ध के पूर्व के इतिहास पर इस वंश परम्परा का कुछ प्रकाश पड़ता है। इसीलिए पार्जीटर आदि कतिपय यूरोपिय विद्वान भी पुराणों की राजवंश परम्परा को इतिहास के लिए अत्यन्त उपयोगी सामग्री मानते हैं। भारतीय विद्वानों ने शनैः शनैः अब इधर ध्यान देना प्रारम्भ किया है। यदि पुराणों की ऐतिहासिक सामग्री प्रकाश में लाई जाए तो इससे बहुत कुछ इतिहास एवं समाज का कल्याण हो सकता है।

वायुमहापुराण के तीसवें अध्याय में दक्ष की सबसे श्रेष्ठ कन्या, जिनका विवाह महेश्वर शिव से हुआ था, उनके अपमान के कारण दक्ष यज्ञ का विध्वंस हुआ और दक्ष ने इस तीसवें अध्याय में शिव की स्तुति की है और भगवान् शङ्कर को प्रसन्न किया है। इसलिए वायुमहापुराण शैवपुराण है।

यतः पुराण सनातन परम्परा से पाण्डुलिपियों में लिखे जा रहे हैं इसलिए विद्वानों ने अपने-अपने अनुसार पुराणों में प्रक्षिप्त अंश जोड़ दिए हैं। इसी प्रकार वायुमहापुराण में भी बहुत से प्रक्षिप्त अंश हैं, जिन्हें आनन्दाश्रम, पूणे से प्रकाशित वायुमहापुराण के संस्करण में दिया गया है। किन्तु वेङ्कटेश्वर प्रेस के संस्करण में वह सभी प्रक्षिप्त अंश मिला दिए गए हैं। हिन्दी साहित्य सम्मेलन के संस्करण में आनन्दाश्रम संस्करण को ही आधार माना गया है और जिन प्रक्षिप्त अंश को आनन्दाश्रम के संस्करण में रक्खा गया था उसकी भी हिन्दी की गई है। इसलिए जो प्रक्षिप्त अंश हैं उनको प्रस्तुत संस्करण में हमने निकाल दिया है।

हिन्दी साहित्य सम्मेलन से रामप्रताप त्रिपाठी शास्त्री की हिन्दी यदि न होती तो इस पुराण की हिन्दी मैं कदापि नहीं कर पाता। उन्होंने बहुत मेहनत करके हिन्दी की जो पहले किसी अन्य ने शुरू की थी परन्तु वायुमहापुराण की कठिनाईयों के कारण उन्होंने छोड़ दिया था। मैं हिन्दी साहित्य सम्मेलन के इस संस्करण का अत्यन्त आभारी हूँ। इस समय जितने भी वायुमहापुराण के संस्करण उपलब्ध हैं, उन सभी ने इससे ही सहायता ली है।

प्रस्तुत संस्करण में प्रारम्भ में एक विस्तृत विषयसूची हिन्दी में दी गई है। ग्रन्थ के अन्त में सम्पूर्ण वायुमहापुराण की श्लोकानुक्रमणिका सर्वप्रथम दी गई है।

यथासम्भव यथामति वायुमहापुराण की हिन्दी प्रस्तुत है जो शुद्ध ही हो—ऐसा नहीं है। कोई भी सर्वज्ञ नहीं है। त्रुटि होना स्वाभाविक है। विद्वानों से प्रार्थना है कि त्रुटि का निर्देश अवश्य करें। पुराण एक सनातन परम्परा है। सभी के प्रयास से ही इसका संरक्षण हो सकता है।

इस ग्रन्थ के सम्पादन एवं हिन्दी करने में जो कुछ भी मेरी गति हो सकी है या मैं प्रक्षिप्तांशों को कुछ समझ सका हूँ तो इसका सम्पूर्ण श्रेय मेरे पूज्य पिताजी डॉ० सुधाकर मालवीय, पूर्व विद्वान्, पुराण विभाग, काशिराज ट्रस्ट, दुर्ग रामनगर, वाराणसी, को ही है। यह उन्हीं का कृपाप्रसाद है। उन्होंने १९७०-७२ के मध्य कूर्म पुराण के सम्पादन में जो सहयोग दिया था, उसका लाभ मुझे वायुमहापुराण के सम्पादन एवं हिन्दी करने में पूर्ण रूप से प्राप्त हुआ है। उनसे आशीर्वाद की कामना है। काशीपति बाबा विश्वनाथ उन्हें दीर्घायु करें और इसी प्रकार पुराण सम्पादन में मेरी सहायता करते रहें।

मेरे पुत्र चिरञ्जीव शिवांश मालवीय एवं चिरञ्जीव अचिन्त्य मालवीय ने प्रूफ संशोधन और कम्प्यूटर कार्य में अत्यन्त सहायता की है। मेरी पुत्री सुश्री दिव्यांशी मालवीय, एम.एस.सी., ने मुझे मानसिक रूप से अत्यन्त उत्साह प्रदान किया है। इनकी माता श्रीमती अञ्जली मालवीय, डब्लू.एच.स्मिथ मेमोरियल स्कूल में आंग्लभाषा विभाग की अध्यक्ष हैं। इन्होंने इस पुराण सम्पादन के समय में ही मेरी जो दुर्घटना अप्रैल २०२३ में हो गई थी, उस समय अत्यन्त सेवा की थी। स्कूल के कार्य की व्यस्तता एवं छात्रों को अध्ययन में सहयोग प्रदान करते हुए मानसिक संतुलन न खोते हुए गृह कार्य भी देखती रहीं। भगवान् आशुतोष एवं भगवती अम्बा पार्वती इनका अभ्युदय करें तथा धैर्य एवं सद्विवेक प्रदान करें।

इस ग्रन्थ के प्रकाशक चौखम्बा संस्कृत सीरीज आफिस के श्रेष्ठी श्रीब्रजमोहनदासजी गुप्त एवं श्रीकमलेश कुमारजी गुप्त को अत्यन्त धन्यवाद है। विशेष रूप से इस पुरातन संस्था के भविष्य श्रीसचिन कुमारजी गुप्त एवं श्री कौशिकजी गुप्त को आशीर्वाद है।

**भवानीशङ्करौ वन्दे श्रद्धाविश्वासरूपिणौ। याभ्यां विना न पश्यन्ति सिद्धाः स्वान्तःस्थमीश्वरम्।**

श्रद्धा एवं विश्वास रूप वाले भवानी एवं शङ्कर की मैं वन्दना करता हूँ, जिनके बिना सिद्धजन भी अपने अन्तरात्मा में स्थित ईश्वर को नहीं देख सकते।

विद्वद्वशंवद

चित्तरंजन मालवीय

# श्रीमद्वायुमहापुराणस्य विषयानुक्रमणिका


अ० विषयाः पृष्ठाङ्काः

पूर्वार्द्धम्

१. प्रक्रियापादः

१. अनुक्रमणिकाकथनम् ३
२. द्वादशवार्षिकसत्रनिरूपणम् १९
३-६. सृष्टिप्रकरणम् २३,२७,३५,४०

२. उपोद्घातपादः

७. प्रतिसन्धिकीर्त्तनम् ४७
८. चतुराश्रमविभागः ५४
९. देवादिसृष्टिवर्णनम् ७०
१०. मन्वन्तरादिवर्णनम् ८०
११. पाशुपतयोगः ८८
१२. योगोपसर्गाः ९४
१३. योगैश्वर्याणि ९८
१४-१५. पाशुपतयोगः १०१,१०५
१६. शौचाचारलक्षणम् १०७
१७. परमाश्रमप्राप्तिकथनम् ११०
१८. यतिप्रायश्चित्तविधिः १११
१९. अरिष्टानि ११४
१०. ओङ्कारप्राप्तिलक्षणम् ११८
२१. कल्पनिरूपणम् १२३
२२. कल्पसंख्यानिरूपणम् १३०
२३. माहेश्वरावतारयोगः १३३
२४. शार्व्वस्तवः १५१
२५. मधुकैटभोत्पत्तिविनाशवर्णनम् १६६
२६. स्वरोत्पत्तिः १७५
२७. महादेवतनुवर्णनम् १८०
२८. ऋषिवंशवर्णनम् १८६
२९. अग्निवंशवर्णनम् १९०
३०. दक्षशापवर्णनम् १९५
३१. देववंशवर्णनम् २२२

अ० विषयाः पृष्ठाङ्काः

३२. युगधर्माः २२८
३३. स्वायम्भुववंशवर्णनम् २३४
३४-३५. जम्बूद्वीपवर्णनम् २४०,२४९
३६-३८. पूर्व्वादिचतुर्दिग्विभागस्थसरः शैलादिकीर्त्तनम् २५३,२५६,२५९
३९. शैलस्थितविविधदेवालयकीर्त्तनम् २६५
४०. देवकूटपर्व्वतमर्यादाकीर्त्तनम् २७१
४१. कैलासवर्णनम् २७४
४२. देवनदीवर्णनम् २८१
४३-४४. केतुमालवर्णनम् २८८,२९२
४५. भारतवर्षवर्णनम् २९४
४६. किंपुरुषादिवर्षवर्णनम् ३०५
४७. गङ्गावतारवर्णनम् ३०९
४८. जम्बूद्वीपान्तर्वर्त्तिद्वीपवर्णनम् ३१६
४९. प्लक्षद्वीपादिवर्णनम् ३२०
५०-५१. ज्योतिष्प्रचारः ३३६,३५४
५२. ध्रुवचर्या ३६१
५३. ज्योतिःसान्निवेशः ३७०
५४. नीलकण्ठस्तवः ३८१
५५. लिङ्गोद्भवस्तवः ३९२
५६. पितृवर्णनम् ३९९
५७. यज्ञप्रवर्त्तनम् ४०८
५८. चतुर्युगाख्यानम् ४२०
५९. ऋषिलक्षणम् ४३२
६०. महास्थानतीर्थवर्णनम् ४४३
६१. प्रजापतिवंशानुकीर्त्तनम् ४५१

उत्तरार्द्धम्

१. पृथिवीदोहनम् ४६९
२. पृथुवंशानुकीर्त्तनम् ४८७
३. वैवस्वतसर्गवर्णनम् ४९३

| अ० विषयाः | पृष्ठाङ्काः |
|---|---|
| ३. अनुषङ्गपादः | |
| ४. प्रजापतिवंशानुकीर्त्तनम् | ४९७ |
| ५-८. काश्यपीयप्रजासर्गः | ५१२,५२७,५४०,५४४ |
| ९. ऋषिवंशानुकीर्त्तनम् | ५७६ |
| १०. श्राद्धप्राक्रियारम्भः | ५८५ |
| ११-१६. श्राद्धकल्पः | ५९३,६०४,६०८, ६१५,६२०,६३२ |
| १७. श्राद्धकल्पे ब्राह्मणपरीक्षा | ६४० |
| १८. श्राद्धकल्पे दानफलम् | ६५० |
| १९. तिथिविशेषे श्राद्धफलम् | ६५६ |
| २०. नक्षत्रविशेषे श्राद्धफल | ६५९ |
| २१. भिन्नकालिकतृप्तिसाधनद्रव्यविशेष-गयाश्राद्धादिफलकीर्त्तनम् | ६६१ |
| २२. वरुणवंशवर्णनम् | ६७२ |
| २३. वैवस्वतमनोः सृष्टिकथनम् | ६८० |
| २४. वैवस्वतमनुवंशप्रसङ्गे गान्धर्व्वमूर्च्छना-लक्षणकथनम् | ६८३ |
| २५. गीतालङ्कारनिर्देशः | ६८९ |
| २६-२७. वैवस्वतमनुवंशवर्णनम् | ६९४,७१५ |
| २८. सोमोत्पत्तिः | ७१८ |
| २९. चन्द्रवंशकीर्त्तनम् | ७२३ |
| ३०. रजियुद्धवर्णनम् | ७३४ |
| ३१. चन्द्रवंशकीर्तनम् | ७४४ |
| ३२. कार्त्तवीर्यार्जुनोत्पत्तिविवरणम् | ७५५ |
| ३३. ज्यामघवृत्तान्तकथनम् | ७६१ |
| ३४. विष्णुवंशवर्णनम् | ७६६ |
| ३५. शम्भुस्तवकीर्तनम् | ७८९ |
| ३६. विष्णुमाहात्म्यकीर्त्तनम् | ८०६ |
| ३७. तुर्वस्वादिपुरुवंशवर्णनम् | ८१८ |
| ४. उपसंहारपादः | |
| ३८. सप्तमन्वादिचतुर्दशमनुपर्यन्तानां विवरणम् | ८५७ |
| ३९. महर्लोकादिशिवपुरपर्य्यन्तविवरणम् | ८७९ |
| ४०-४१. प्रलयादिपुनःसृष्टिविवरणम् | ९११,९२३ |
| ४२. व्याससंशयापनोदनम् | ९३० |
| ४३-५०. गयामाहात्म्यम् | ९४०,९४५,९५४, ९६०,९६९,९७५, ९८२,९९१ |

॥ इति श्रीमद्वायुमहापुराणविषयानुक्रमणिका ॥

# विषय सूची

## पूर्वार्द्ध

### १. प्रक्रियापाद


१. वायुपुराण की अनुक्रमणिका ३
२. बारह वर्षों तक चलने वाले यज्ञ का निरूपण १९
३. प्रजापति की सृष्टि का वर्णन २३
४. प्राचीन ऋषियों की विचित्र सृष्टि का वर्णन २७
५. सृष्टिप्रकरण ३५
६. सृष्टिप्रकरण ४०


### २. उपोद्घातपाद


७. कल्पों की प्रतिसन्धि का वर्णन ४७
८. चतुराश्रम विभाग वर्णन ५४
९. देव आदि की सृष्टि का वर्णन ७०
१०. मन्वन्तरों का वर्णन ८०
११. पाशुपतयोग निरूपण ८८
१२. योगोपसर्ग कथन ९४
१३. योगैश्वर्य निरूपण ९८
१४. पाशुपतयोग निरूपण १०१
१५. पाशुपतयोग निरूपण १०५
१६. शौचाचार लक्षण निरूपण १०७
१७. परमाश्रम विधि कथन ११०
१८. यति प्रायश्चित्त विधिकथन १११
१९. अरिष्ट निरूपण ११४
२०. ओङ्कारप्राप्ति लक्षण निरूपण ११८
२१. कल्प निरूपण १२३
२२. कल्पसंख्यानिरूपण १३०
२३. माहेश्वरावतारयोग १३३
२४. शार्वस्तव १५१
२५. मधुकैटभोत्पत्तिविनाश वर्णन १६६
२६. स्वरोत्पत्ति निरूपण १७५
२७. महादेव के शरीर का वर्णन १८०
२८. ऋषिवंश कीर्त्तन १८६
२९. अग्निवंश वर्णन १९०
३०. दक्षशाप वर्णन १९५
३१. देववंश वर्णन २२२
३२. युगधर्म २२८
३३. स्वायम्भुव वंश वर्णन २३४
३४. जम्बूद्वीप वर्णन २४०
३५. जम्बूद्वीप वर्णन २४९
३६. भुवनविन्यास २५३
३७. भुवनविन्यास २५६
३८. भुवनविन्यास २५९
३९. भुवनविन्यास २६५
४०. भुवनविन्यास २७१
४१. भुवनविन्यास २७४
४२. भुवनविन्यास २८१
४३. भुवनविन्यास २८८
४४. भुवनविन्यास २९२
४५. भुवनविन्यास २९४
४६. भुवनविन्यास ३०५
४७. भुवनविन्यास ३०९
४८. भुवनविन्यास ३१६
४९. भुवनविन्यास ३२०
५०. ग्रह एवं नक्षत्रों का भ्रमण ३३६
५१. ग्रह एवं नक्षत्रों का भ्रमण ३५४
५२. ग्रह एवं नक्षत्रों का भ्रमण ३६१

५३. ज्योति सन्निवेश ३७०
५४. नीलकण्ठ की स्तुति ३८१
५५. लिङ्गोद्भवस्तव ३९२
५६. पितरों का वर्णन ३९९
५७. यज्ञ वर्णन ४०८
५८. चतुर्युग वर्णन ४२०
५९. ऋषियों के लक्षण ४३२
६०. महास्थानतीर्थवर्णन ४४३
६१. प्रजापति के वंश का वर्णन ४५१


**उत्तरार्द्ध**


१. पृथिवी का दोहन ४६९
२. पृथु के वंश का वर्णन ४८७
३. वैवश्वत मन्वन्तर की सृष्टि का वर्णन ४९३


**३. अनुषङ्गपाद**


४. प्रजापति के वंश का वर्णन ४९७
५. कश्यप ऋषि की प्रजा का वर्णन ५१२
६. कश्यप की प्रजा सृष्टि का वर्णन ५२७
७. कश्यप की सन्ततियों की सृष्टि का वर्णन ५४०
८. कश्यप ऋषि की प्रजा सृष्टि ५४४
९. ऋषि वंश का वर्णन ५७६
१०. श्राद्ध की प्रक्रिया ५८५
११. श्राद्ध कल्प ५९३
१२. श्राद्ध कल्प ६०४
१३. श्राद्ध कल्प ६०८
१४. श्राद्ध कल्प ६१५
१५. श्राद्ध कल्प में तीर्थयात्रा ६२०
१६. श्राद्ध कल्प ६३२
१७. श्राद्ध कल्प ६४०
१८. श्राद्ध कल्प में दान का फल ६५०
१९. विशेष तिथि में श्राद्ध का फल ६५६
२०. विशेष नक्षत्रों में श्राद्ध का फल ६५९
२१. गया श्राद्ध का फल ६६१
२२. वरुणवंश वर्णन ६७२
२३. वैवस्वतमनुवंश वर्णन ६८०
२४. गन्धर्वों की मूर्च्छना ६८३
२५. गीतालङ्कार वर्णन ६८९
२६. वैवस्वतमनुवंश वर्णन ६९४
२७. मैथिलवंश वर्णन ७१५
२८. चन्द्रमा का जन्म वृत्तान्त ७१८
२९. चन्द्रवंश का वर्णन ७२३
३०. रजियुद्धवर्णन ७३४
३१. ययातिप्रसव कीर्त्तन ७४४
३२. कार्तवीर्यार्जुनोत्पत्ति वर्णन ७५५
३३. ज्यामघ वृत्तान्त वर्णन ७६१
३४. विष्णुवंश वर्णन ७६६
३५. विष्णुमाहात्म्य वर्णन ७८९
३६. विष्णुमाहात्म्य वर्णन ८०६
३७. ययाति के पुत्रों का वंशवर्णन ८१८


**४. उपसंहारपाद**


३८. मन्वन्तरों का वर्णन ८५७
३९. भूर्लोक आदि की व्यवस्था एवं शिवपुर का वर्णन ८७९
४०. प्रतिसर्ग वर्णन ९११
४१. सृष्टि वर्णन ९२३
४२. व्यासजी की सन्देह निवृत्ति का वर्णन ९३०
४३. गया माहात्म्य वर्णन ९४०
४४. गया माहात्म्य वर्णन ९४५
४५. गया माहात्म्य वर्णन ९५४
४६. गया माहात्म्य वर्णन ९६०
४७. गया माहात्म्य वर्णन ९६९
४८. गया माहात्म्य वर्णन ९७५
४९. गया माहात्म्य वर्णन ९८२
५०. गया माहात्म्य वर्णन ९९१


* * *

**प्रथमं सर्वशास्त्राणां पुराणं ब्रह्मणा स्मृतम् ।**

—वायुपुराण १.५४

प्रथमतया ब्रह्मा ने सभी शास्त्रों में पुराण को रचा ।

ॐ तत्सद्ब्रह्मणे नमः

श्रीमद्कृष्णद्वैपायनमुनिप्रणीतम्

# श्रीवायुमहापुराणम्

## तत्र प्रक्रियापादे

## प्रथमोऽध्यायः

### वायुपुराणानुक्रमणिका

मङ्गलाचरणम्

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् । देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥

जयति पराशरसूनुः सत्यवतीहृदयनन्दनो व्यासः ।

यस्यास्यकमलगलितं वाङ्मयममृतं जगत् पिबति ॥

प्रपद्ये देवमीशानं शाश्वतं ध्रुवमव्ययम् । महादेवं महात्मानं सर्वस्य जगतः पतिम् ॥ १ ॥

ब्रह्माणं लोककर्त्तारं सर्वज्ञमपराजितम् । प्रभुं भूतभविष्यस्य साम्प्रतस्य च सत्पतिम्॥ २ ॥

---

## प्रथम अध्याय

### प्रक्रियापाद में वायुपुराण की अनुक्रमणिका

नर (अर्जुन) एवं नारायण (श्रीकृष्ण) जो मनुष्यों में उत्तम हैं, देवी सरस्वती और व्यास (परंपरा में आए हुए सभी व्यासों) को नमस्कार करके मैं (कृष्णद्वैपायन व्यास) वायु पुराण का आख्यान कहता हूँ जिससे सारे संसार की जय हो। जिनके मुखरूपी कमल से प्राप्त समस्त वाङ्मयरूप अमृत का यह जगत् पान करता है उन पराशर के पुत्र एवं माता सत्यवती के हृदय को आनन्द देने वाले व्यास को मैं नमस्कार करता हूँ, उनकी जय हो।

* सरला *

**प्राणस्वरूपो यद् वायुं चेतनेत्यभिधीयते । शब्दस्पर्शगुणान्वितं तं देवं प्रणमाम्यहम् ॥ १ ॥**

समस्त संसार के पालक महादेव ईशान देवता जो अव्यय, ध्रुव एवं शाश्वत हैं, ऐसे महात्मा महादेव के शरण में मैं कृष्णद्वैपायन व्यास हूँ। समस्त संसार के कर्ता ब्रह्मा, सर्वज्ञ एवं अपराजित, भूत एवं भविष्य तथा वर्तमान के प्रभु जो अच्छे पालक हैं मैं उनकी शरण लेता हूँ ॥ १-२ ॥

ज्ञानमप्रतिमं यस्य वैराग्यं च जगत्पतेः । ऐश्वर्यञ्चैव धर्मश्च सह सिद्धिचतुष्टयः ॥ ३ ॥
य इमान् पश्यते भावान्नित्यं सदसदात्मकान् । आविशन्ति पुनस्तं वै क्रियाभावार्थमीश्वरम् ॥ ४ ॥
लोककृल्लोकतत्त्वज्ञो योगमास्थाय तत्त्ववित् । असृजत् सर्वभूतानि स्थावराणि चराणि च ॥ ५ ॥
तमजं विश्वकर्माणं चित्पतिं लोकसाक्षिणम् । पुराणाख्यानजिज्ञासुर्व्रजामि शरणं प्रभुम् ॥ ६ ॥
ब्रह्मवायुमहेन्द्रेभ्यो नमस्कृत्य समाहितः । ऋषीणाञ्च वरिष्ठाय वसिष्ठाय महात्मने ॥ ७ ॥
तन्नप्त्रे चातियशसे जातूकर्णाय चर्षये । वसिष्ठाय च शुचये कृष्णद्वैपायनाय च ॥ ८ ॥
पुराणं सम्प्रवक्ष्यामि ब्रह्मोक्तं वेदसम्मितम् । धर्मार्थन्यायसंयुक्तैरागमैः सुविभूषितम् ॥ ९ ॥
असीमकृष्णे विक्रान्ते राजन्येऽनुपमत्विषि । प्रशासतीमां धर्मेण भूमिं भूमिपसत्तमे ॥ १० ॥
ऋषयः संशितात्मानः सत्यव्रतपरायणाः । ऋजवो नष्टरजसः शान्ता दान्ता जितेन्द्रियाः ॥ ११ ॥
धर्मक्षेत्रे कुरुक्षेत्रे दीर्घसत्रं तु ईजिरे । नद्यास्तीरे दृषद्वत्याः पुण्यायाः शुचिरोधसः ॥
दीक्षितास्ते यथाशास्त्रं नैमिषारण्यगोचराः ॥ १२ ॥
द्रष्टुं तान् स महाबुद्धिः सूतः पौराणिकोत्तमः। लोमानि हर्षयाञ्चक्रे श्रोतॄणां यत् सुभाषितैः ॥
कर्मणा प्रथितस्तेन लोकेऽस्मिँल्लोमहर्षणः ॥ १३ ॥

---

जिन जगत् का पालन करने वाले विष्णु का ज्ञान और वैराग्य अद्वितीय है, जिनका पूजन धर्म, अर्थ एवं काम आदि चार पुरुषार्थों को ऐश्वर्य के साथ प्रदान करने वाला है, उन विष्णु की शरण में मैं हूँ ॥ ३ ॥

सत् एवं असत् भावों को जो नित्य ही देखते रहते हैं और हमारे कर्म के भाव की सिद्धि के लिए जो ईश्वर मुझ में प्रविष्ट हैं उनकी शरण में मैं हूँ । जो स्थावर-जंगमादि सभी भूतों के सृष्टिकर्ता, लोक-सृजनकर्ता और लोकों के तत्त्व को जानने वाले, योग में स्थित होकर जो तत्त्ववित् ब्रह्मा हैं उनकी शरण में मैं हूँ ॥ ४-५ ॥

विश्व का सृजन करने वाले उन ब्रह्मा का जो चैतन्य रूप से हमारे हृदय में विद्यमान रह कर इन लोकों के साक्षी हैं, मैं पुराण रूप इतिहास को जानने की इच्छा से उन ब्रह्मा की शरण में हूँ । सावधान मन से ब्रह्मा, वायु एवं महेन्द्र को नमस्कार करके ऋषियों में श्रेष्ठतम महात्मा वसिष्ठ को नमस्कार कर मैं इस वायुपुराण को कहता हूँ । उन वसिष्ठ के दौहत्य अर्थात् नाती, यशस्वी, परम कीर्तिमान जातूकर्ण ऋषि को प्रणाम करके उत्तम पुण्यात्मा कृष्णद्वैपायन को नमस्कार कर मैं इस वायुपुराण को कहता हूँ । वेद सम्मत ब्रह्मा के द्वारा कहे गए धर्म, अर्थ, न्याय व आगम शास्त्रों से संयुक्तरूप से विभूषित वायुपुराण को मैं कहता हूँ ॥ ६-९ ॥

प्राचीन काल में जब नरपतिश्रेष्ठ, पराक्रमी, कान्तिमान् महाराज असीमकृष्ण इस पृथ्वी का धर्मपूर्वक पालन कर रहे थे, उस समय पुण्यसलिला दृषद्वती नदी जिसके तट अत्यन्त पवित्र हैं, उस धर्मक्षेत्र कुरुक्षेत्र में सरल एवं शान्त, संयमित (अपनी इच्छाओं का शमन करने वाले), इन्द्रियों को जीतने वाले रजोगुण रहित स्थिर बुद्धि वाले सत्यव्रत में परायण ऋषियों ने एक महान यज्ञ किया । शास्त्र की विधि में दीक्षित उन नैमिषारण्य में वास करने वाले ऋषियों के द्वारा वह यज्ञ सम्पन्न कराया जा रहा था । वहाँ पर अत्यन्त बुद्धिमान, पुराणों के उत्तम जानकार सूत जी उन ऋषियों का दर्शन करने के लिए वहां आए । उनके वचनों को सुनने के बाद श्रोता आनन्द से रोमाञ्चित हो जाते थे । अतः उनके इस रोमाञ्चित कर देने के कर्म के कारण उन सूतजी का नाम इस लोक में लोमहर्षण प्रसिद्ध हुआ ॥ १०-१३ ॥

**तपःश्रुताचारनिधेर्वेदव्यासस्य धीमतः । शिष्यो बभूव मेधावी त्रिषु लोकेषु विश्रुतः ॥ १४ ॥**
**पुराणवेदो ह्यखिलो यस्मिन् सम्यक् प्रतिष्ठितः । भारती चैव विपुला महाभारतवर्द्धिनी ॥ १५ ॥**
**धर्मार्थकाममोक्षार्थाः कथा यस्मिन् प्रतिष्ठिताः। सूक्ताः सुपरिभाषाश्च भूमावोषधयो यथा ॥ १६ ॥**
**स तान् न्यायेन सुधियो न्यायविन्मुनिपुङ्गवान् । अभिगम्योपसंसृत्य नमस्कृत्य कृताञ्जलिः ॥**
**तोषयामास मेधावी प्रणिपातेन तानृषीन् ॥ १७ ॥**
**ते चापि सत्रिणः प्रीताः ससदस्या महौजसः । तस्मै साम च पूजाञ्च यथावत् प्रतिपेदिरे ॥ १८ ॥**
**अथ तेषां पुराणस्य शुश्रूषा समपद्यत । दृष्ट्वा तमतिविश्वस्तं विद्वांसं लोमहर्षणम् ॥ १९ ॥**
**तस्मिन् सत्रे गृहपतिः सर्वशास्त्रविशारदः । इङ्गितैर्भावमालक्ष्य तेषां सूतमचोदयत् ॥ २० ॥**
**त्वया सूत महाबुद्धिर्भगवान् ब्रह्मवित्तमः । इतिहासपुराणार्थं व्यासः सम्यगुपासितः ॥**
**दुदोह वै मतिं तस्य त्वं पुराणाश्रयां कथाम् ॥ २१ ॥**
**एषाञ्च ऋषिमुख्यानां पुराणं प्रति धीमताम् । शुश्रूषास्ति महाबुद्धे तच्छ्रावयितुमर्हसि ॥ २२ ॥**
**सर्वे हीमे महात्मानो नानागोत्राः समागताः। स्वान् स्वान् वंशान् पुराणैस्तु शृणुयुर्ब्रह्मवादिनः ॥ २३ ॥**
**सपुत्रान् दीर्घसत्रेऽस्मिञ्श्रावयेथा मुनीनथ । दीक्षिष्यमाणैरस्माभिस्तेन प्रागसि संस्मृतः ॥ २४ ॥**

---

वे लोमहर्षण तपस्या, विद्या एवं सदाचार के निधान श्रीवेदव्यास के प्रधान एवं मेधावी शिष्य थे जो तीनों लोकों में विख्यात थे ॥ १४ ॥

समस्त पुराण, वेदों तथा महाभारत को पल्लवित करने वालों में शक्तिरूप सरस्वती वाणी उनमें प्रतिष्ठित थी । उनमें धर्म, अर्थ, काम एवं मोक्ष पुरुषार्थ चतुष्टय को प्राप्त कराने वाली कथा विद्यमान थी ॥ १५-१६ ॥

जिस प्रकार समस्त पृथिवी में ओषधियाँ व्याप्त हैं, उसी प्रकार उन सूतजी में धर्म, अर्थ, काम एवं मोक्ष की कथाएँ तथा सूक्तियाँ और सुन्दर परिभाषाएँ उनकी मेधा में विद्यमान थीं ॥ १७ ॥

नीतियों के ज्ञाता एवं मेधावी सूतजी आदर पूर्वक मुनिवरों के पास पहुँचे और उन सभी को नियम से हाथ जोड़ कर प्रणाम निवेदित किया । उन्होंने उन ऋषियों को अपनी नम्रता भरे व्यवहार से सन्तुष्ट किया ॥ १८ ॥

यज्ञ में रत वे परम तेजस्वी मुनिगण बाकी सभी सहयोगियों के साथ बहुत प्रसन्न हुए और उन श्रीसूतजी की यथायोग्य प्रशंसा एवं पूजन करने लगे । उस समय मुनियों के मन में सूतजी से पुराणों के व्याख्यान सुनने की इच्छा प्रकट हुई । उस यज्ञ के यजमान सभी शास्त्रों के जानकार थे । उन्होंने उन ऋषियों के द्वारा पुराणों को सुनने की इच्छा के मनोभावों को समझकर अत्यन्त विश्वस्त एवं परम विद्वान् लोमहर्षण (श्रीसूतजी) से कहा— हे सूतजी ! आपने ब्रह्मज्ञ, वरिष्ठ एवं मेधावी श्रीव्यासजी की इतिहास और पुराणों के ज्ञानप्राप्ति के निमित्त महती उपासना की है और उनकी कृपा से आपने पुराणों के सार का ज्ञान प्राप्त कर लिया है ॥ १९-२१ ॥

हे महाबुद्धि श्रीसूतजी ! इन सभी ऋषियों को पुराणों की कथा श्रवण करने की बहुत इच्छा है अतः आप सभी को कथा सुनाइये । यहाँ इस यज्ञ में आए हुए सभी ऋषिगण विभिन्न गोत्रों के हैं । इन ब्रह्मवादियों को अपने-अपने वंशों के अनुसार पुराणों का आख्यान सुनने दें । इस महान् यज्ञ में पुत्रों समेत आये हुए इन सभी मुनिगणों को पुराण की कथाएँ सुनाइये । इसी उद्देश्य से हम लोगों ने यज्ञ की दीक्षा लेने के पूर्व आपका स्मरण किया है ।

इति सन्नोदितः सूतस्तैरेव मुनिभिः पुरा । पुराणार्थं पुराणज्ञैः सत्यव्रतपरायणैः ॥ २५ ॥
स्वधर्म एष सूतस्य सद्भिर्दृष्टः पुरातनैः । देवतानामृषीणाञ्च राज्ञाञ्चामिततेजसाम् ॥ २६ ॥
वंशानां धारणं कार्यं श्रुतानाञ्च महात्मनाम् । इतिहासपुराणेषु दिष्टा ये ब्रह्मवादिभिः ॥ २७ ॥
न हि वेदेष्वधीकारः कश्चित् सूतस्य दृश्यते । वैन्यस्य हि पृथोर्यज्ञे वर्त्तमाने महात्मनः ॥
सुत्यायामभवत् सूतः प्रथमं वर्णवैकृतः ॥ २८ ॥
ऐन्द्रेण हविषा तत्र हविः पृक्तं बृहस्पतेः । जुहावेन्द्राय देवाय ततः सूतो व्यजायत ॥
प्रमादात्तत्र सञ्जज्ञे प्रायश्चित्तञ्च कर्मसु ॥ २९ ॥
शिष्यहव्येन यत् पृक्तमभिभूतं गुरोर्हविः । अधरोत्तरचारेण जज्ञे तद्वर्णवैकृतः ॥ ३० ॥
यच्च क्षत्रात् समभवद्ब्राह्मणाऽवरयोनितः । ततः पूर्वेण साधर्म्यात्तुल्यधर्मा प्रकीर्त्तितः ॥ ३१ ॥
मध्यमो ह्येष सूतस्य धर्मः क्षत्रोपजीवनम् । रथनागाश्वचरितं जघन्यञ्च चिकित्सितम् ॥ ३२ ॥
तत् स्वधर्ममहं पृष्टो भवद्भिर्ब्रह्मवादिभिः। कस्मात् सम्यङ् न विब्रूयां पुराणमृषिपूजितम् ॥ ३३ ॥
पितृणां मानसी कन्या वासवी समपद्यत । अपध्याता च पितृभिर्मत्स्ययोनौ बभूव सा ॥ ३४ ॥
अरणीव हुताशस्य निमित्तं यस्य जन्मनः । तस्यां जातो महायोगी व्यासो वेदविदां वरः ॥ ३५ ॥

---

सभी ऋषियों तथा यज्ञ के यजमान गृहपति की इच्छा जानकर लोमहर्षण श्रीसूतजी ने नम्रता भरी वाणी से न्यायोचित कल्याणकारी वचन कहे ॥ २२-२४ ॥

श्रीसूत जी ने कहा—हे ऋषिगणों ! आप सभी लोग स्वयं पुराणों के ज्ञाता हैं और सत्यव्रत का पालन करते हैं । इसके उपरान्त भी आप लोगों ने जो मुझसे पुराण कथा सुनाने की इच्छा की है उससे मैं परम पुनीत हुआ हूँ और यह हमारे ऊपर आपका परम अनुग्रह है । प्राचीन सत्पुरुषों ने सूत का यही धर्म बताया है कि वह इतिहास-पुराणों में विद्वानों द्वारा बताये हुए देवताओं, ऋषियों तथा अतुल तेजस्वी राजाओं की वंशावली तथा महात्माओं की सुनी बातों को धारण करे ॥ २५-२७ ॥

वेदों में सूतों का कोई अधिकार नहीं कहा गया है । महात्मा वेन के पुत्र (पृथु) के यज्ञ के अवसर पर सर्वप्रथम यज्ञ की ओषधियों के कूटने के समय वर्णसंकर सूत की उत्पत्ति हुई । इन्द्र को यज्ञ में दिये जाने वाले द्रव्य के साथ बृहस्पति को दिया जाने वाला द्रव्य मिश्रित हो गया और उसी की आहुति इन्द्रदेव को भूलवश दे दी गयी इसी कारण से सूत उत्पन्न हुआ और कार्यों में प्रायश्चित्त करने का विधान भी आया ॥ २८-२९ ॥

शिष्य के हविष्य के साथ मिलने से गुरु के हविष्य का अनादर हुआ, अतः नीच का उच्च में मिल जाने से वर्णसंकर सूत की उत्पत्ति हुई । अवर क्षत्रिय से ब्राह्मण योनि द्वारा उत्पन्न होने के कारण सूत साधर्म्य से उसी (क्षत्रिय) के तुल्य धर्मवाले कहलाये । सारथि का कर्म (अर्थात् रथ, हाथी, घोड़ों इत्यादि के परिचालन का काम) सूत के लिए मध्यम एवं चिकित्सा करना जघन्य धर्म है । अतएव जब आप ब्रह्मवादियों ने मुझसे अपने धर्म की बात पूछी है तो फिर मैं ऋषिपूजित पुराण का अच्छी प्रकार से वर्णन क्यों नहीं करूँगा? । पितरों की वासवी नामक एक मानसी कन्या हुई । पितरों के शाप के कारण वह मत्स्य योनि में उत्पन्न हुई । जिस प्रकार काष्ठ से अग्नि का जन्म होता है, उसी प्रकार वेदज्ञों में श्रेष्ठ महायोगी व्यास जी ने उस मत्स्य से जन्म ग्रहण किया ॥ ३०-३५॥

तस्मै भगवते कृत्वा नमो व्यासाय वेधसे । पुरुषाय पुराणाय भृगुवाक्यप्रवर्त्तिने ॥
मानुषच्छन्नरूपाय विष्णवे प्रभविष्णवे ॥ ३६ ॥
जातमात्रञ्च यं वेद उपतस्थे ससङ्ग्रहः । धर्ममेव पुरस्कृत्य जातूकर्णादवाप तम् ॥ ३७ ॥
मतिं मन्थानमाविध्य येनासौ श्रुतिसागरात् । प्रकाशं जनितो लोके महाभारतचन्द्रमाः ॥ ३८ ॥
वेदद्रुमश्च यं प्राप्य सशाखः समपद्यत । भूमिकालगुणान् प्राप्य बहुशाखो यथा द्रुमः ॥ ३९ ॥
तस्मादहमुपश्रुत्य पुराणं ब्रह्मवादिनः । सर्वज्ञात्सर्ववेदेषु पूजिताद्दीप्ततेजसः ॥ ४० ॥
पुराणं सम्प्रवक्ष्यामि यदुक्तं मातरिश्वना । पृष्टेन मुनिभिः पूर्वं नैमिषीयैर्महात्मभिः ॥ ४१ ॥
महेश्वरः परोऽव्यक्तश्चतुर्बाहुश्चतुर्मुखः । अचिन्त्यश्चाप्रमेयश्च स्वयम्भूर्हेतुरीश्वरः ॥ ४२ ॥
अव्यक्तं कारणं यद्यन्नित्यं सदसदात्मकम् । महदादिविशेषान्तं सृजतीति विनिश्चयः ॥ ४३ ॥
अण्डं हिरण्मयञ्चैव बभूवाप्रतिमं ततः । अण्डस्यावरणञ्चाद्भिरपामपि च तेजसा ॥ ४४ ॥
वायुना तस्य नभसा नभो भूतादिना वृतम् । भूतादिर्महता चैव अव्यक्तेनावृतो महान् ॥ ४५ ॥
अतोऽत्र विश्वदेवानामृषीणाञ्चोपवर्णितम् । नदीनां पर्वतानाञ्च प्रादुर्भावोऽत्र शस्यते ॥ ४६ ॥
मन्वन्तराणां सर्वेषां कल्पानाञ्चोपवर्णनम् । कीर्त्तनं ब्रह्मक्षत्रस्य ब्रह्मजन्म च कीर्त्त्यते ॥ ४७ ॥
अतो ब्रह्मणि स्रष्टृत्वं प्रजासर्गोपवर्णनम् । अवस्थाश्चात्र कीर्त्त्यन्ते ब्रह्मणोऽव्यक्तजन्मनः ॥ ४८ ॥

---

उन्हीं भृगु मुनि के वाक्यों का अनुसरण करने वाले ब्रह्मरूप, पुराणपुरुष, मनुष्य के कपट वेश में साक्षात् भगवान् विष्णु श्री व्यासजी को नमस्कार करके मैं आज आप लोगों को यह पुराण सुनाऊँगा । जिन व्यासदेव के जन्म लेते ही अपने सभी अङ्गों एवं उपाङ्गों सहित वेद स्वयं उपस्थित हो गए । उन व्यास देव ने धर्म को साक्षी करके जातूकर्ण्य से उन्हें पाया और अपनी बुद्धि रूपी मथानी से उस श्रुति रूपी समुद्र को मथकर संसार में महाभारत रूपी चन्द्रमा का प्रकाश उत्पन्न किया, जिसको पाकर वेदवृक्ष विभिन्न शाखाओं से उसी प्रकार सुशोभित हुआ जैसे भूमि, काल और गुणों को पाकर पेड़ों में अनेक टहनियाँ निकलती हैं ॥ ३६-३९ ॥

जिसको पूर्वकाल में नैमिषारण्य में निवास करने वाले महात्मा मुनियों के पूछने पर वायुदेव ने वर्णित किया था, उन सर्वज्ञ, समस्त वेदों में पूजित अपने देदीप्यमान तेज से समन्वित ब्रह्मवादी से पुराण सुनकर मैं आज आप लोगों को इस पुराण का श्रवण कराऊँगा । महेश्वर, पर, अव्यक्त, चतुर्बाहु, चतुर्मुख, अचिन्त्य, अप्रमेय, स्वयम्भू ईश्वर ही हेतु हैं, सत्-असत्रूप नित्य अव्यक्त कारण हैं । वे महत् तत्त्व से लेकर विशेष-तत्त्व तक की सृष्टि करने वाले हैं, यह बात सुनिश्चित है ॥ ४०-४३ ॥

सबसे पहले अद्वितीय हिरण्मय अण्ड उत्पन्न हुआ । अण्ड जल से, जल तेज से, तेज वायु से, वायु आकाश से, आकाश भूतादि (मानसिक अहंकार) से, भूतादि महत्-तत्त्व से और महत्-तत्त्व अव्यक्त से आच्छादित था—सर्वप्रथम इसी का वर्णन है । इसके पश्चात् यहाँ समस्त देवताओं तथा ऋषियों का वर्णन किया गया है । नदियों तथा पर्वतों की उत्पत्ति बतायी गयी है और मन्वन्तरों तथा कल्पों का भी वर्णन है । ब्राह्मण और क्षत्रियों की कथा और ब्राह्मण जन्म बतलाया गया है ॥ ४४-४७ ॥

फिर ब्रह्मा से सृष्टि के होने तथा प्रजा सर्ग की बात कही गई है । अव्यक्त जन्म वाले ब्रह्म की अवस्थाएँ,

**कल्पानां वत्सराश्चैव जगतः स्थापनन्तथा । शयनञ्च हरेरत्र पृथिव्युद्धरणन्तथा ॥ ४९ ॥**
**सन्निवेशः पुरादीनां वर्णाश्रमविभागशः । वृक्षाणां गृहसंस्थानां सिद्धानाञ्च विनाशनम् ॥ ५० ॥**
**योजनानां पथाञ्चैव सञ्चरो बहुविस्तरः । स्वर्गे स्थानविभागश्च मर्त्यानां भुविचारिणाम् ॥ ५१ ॥**
**वृक्षाणामोषधीनाञ्च वीरुधाञ्च प्रकीर्त्तनम् । वृक्षनारकिकीटत्वं मर्त्यानां परिकीर्त्तितम् ॥ ५२ ॥**
**देवतानामृषीणाञ्च द्वे सृती परिकीर्त्तिते । अन्नादीनां तनूनाञ्च सर्जनन्त्यजनन्तथा ॥ ५३ ॥**
**प्रथमं सर्वशास्त्राणां पुराणं ब्रह्मणा स्मृतम् । अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः ॥ ५४ ॥**
**अङ्गानि धर्मशास्त्रञ्च व्रतानि नियमास्तथा । पशूनां पुरुषाणाञ्च सम्भवः परिकीर्तितः ॥ ५५ ॥**
**तथा निर्वचनं प्रोक्तं कल्पस्य च परिग्रहः । नव सर्गाः पुनः प्रोक्ता ब्रह्मणो बुद्धिपूर्वकाः ॥ ५६ ॥**
**त्रयोऽन्ये बुद्धिपूर्वास्तु ततो लोकानकल्पयत् । ब्रह्मणोऽवयवेभ्यश्च धर्मादीनां समुद्भवः ॥ ५७ ॥**
**ये द्वादश प्रसूयन्ते प्रजाः कल्पे पुनः पुनः । कल्पयोरन्तरं प्रोक्तं प्रतिसन्धिश्च यस्तयोः ॥ ५८ ॥**
**तमोमात्रावृतत्वाच्च ब्रह्मणोऽधर्मसम्भवः । तथैव शतरूपायाः सम्भवश्च ततः परम् ॥ ५९ ॥**
**प्रियव्रतोत्तानपादौ प्रसूत्याकूतयश्च ताः । कीर्त्त्यन्ते धूतपाप्मानो येषु लोकाः प्रतिष्ठिताः ॥ ६० ॥**
**रुचेः प्रजापतेश्चोर्द्ध्वमाकूत्यां मिथुनोद्भवः । प्रसूत्यामपि दक्षस्य कन्यानां प्रभवस्ततः ॥ ६१ ॥**
**दाक्षायणीषु चाप्यूर्द्ध्वं श्रद्धाद्यासु महात्मनाम् । धर्मस्य कीर्त्त्यते सर्गः सात्त्विकस्यसुखोदयः ॥ ६२ ॥**
**तथाऽधर्म्मस्य हिंसायां तामसोऽशुभलक्षणः । महेश्वरस्य सत्याञ्च प्रजासर्गः प्रकीर्तितः ॥ ६३ ॥**

---

कल्पों के वर्ष तथा जगत् की स्थापना कही गयी है । यहाँ भगवान् के शयन का तथा पृथ्वी का उद्धार करना, वर्ण और आश्रम के साथ-साथ पुर व नगर आदि की सन्निवेश स्थापना तथा उनके विभाग आदि की स्थापना, गृहों के वृक्ष तथा सिद्धियों का विनाश, मार्गों का विस्तार से वर्णन किया गया है । पुण्यात्मा पुरुषों के स्वर्ग में अलग स्थान, वृक्षों, ओषधियों और लताओं का यहाँ वर्णन किया गया है । मृत्यु के बाद पापी मनुष्यों का वृक्ष व नरकीय कीट होना तथा देवताओं और ऋषियों की दो प्रकार की गतियों का वर्णन है । अन्नादि शरीरों की सृष्टि तथा उसके विनाश का भी वर्णन है ॥ ४८-५३ ॥

प्रथमतया ब्रह्मा ने सभी शास्त्रों में पुराण को रचा । ब्रह्मा ने शास्त्रों के प्रारम्भ में पुण्याहवाचन करके मुख से वेद, वेदाङ्ग और धर्मशास्त्र निकाले । व्रत-नियम, पशु एवं पुरुष की उत्पत्ति का वर्णन, कल्प के साथ उनकी व्याख्या, फिर ब्रह्मा के बुद्धिपूर्वक नव सर्ग, फिर तीन अन्य बुद्धिपूर्वक सर्ग, नव लोकों की सृष्टि, फिर वे बारह धर्म जो बार-बार प्रजाकल्प में ब्रह्मा के अंगों से उत्पन्न होते हैं बताये गये हैं । दो कल्पों में परस्पर अन्तर तथा उनकी प्रतिसन्धि, तमोगुण से आच्छादित होने के कारण ब्रह्मा से अधर्म की उत्पत्ति वर्णित है । शतरूपा का जन्म, प्रियव्रत और उत्तानपाद तथा प्रसूति और आकूति, जिनसे सृष्टि का विस्तार हुआ—इसका भी वर्णन है । पुनः जिनके स्मरण से लोग पवित्र होते हैं एवं जिनमें लोक प्रतिष्ठित हैं, उनका वर्णन है ॥ ५४-६० ॥

रुचि एवं प्रजापति इन दोनों की उत्पत्ति के बाद फिर आकूति से मैथुनात्मक सृष्टि का वर्णन, प्रसूति से दक्ष की कन्याओं की उत्पत्ति, श्राद्ध आदि में महात्माओं की उत्पत्ति तथा सात्त्विक धर्म की सुखमयी सृष्टि इत्यादि का वर्णन है ॥ ६१-६२ ॥

अधर्म की अशुभरूपा हिंसामयी तामसी सृष्टि का वर्णन किया गया है । सती और महेश्वर की प्रजा-सृष्टि

**निरामयञ्च ब्रह्माणं तादृशं कीर्त्तितं पुनः। योगं योगनिधिः प्राह द्विजानां मुक्तिकाङ्क्षिणाम् ॥ ६४ ॥**
**अवतारश्च रुद्रस्य महाभाग्यं तथैव च। त्रैवेदिकां कथाञ्चापि संवादः परमो महान् ॥ ६५ ॥**
**ब्रह्मनारायणाभ्याञ्च यत्र स्तोत्रं प्रकीर्त्तितम्। स्तुतस्ताभ्यां स देवेशस्तुतोष भगवान् शिवः ॥ ६६ ॥**
**प्रादुर्भावोऽथ रुद्रस्य ब्रह्मणोऽङ्गे महात्मनः। कीर्त्त्यते नाम हेतुश्च यथाऽरोदीन्महामनाः ॥ ६७ ॥**
**रुद्रादीनि यथा ह्यष्टौ नामान्याप्नोत् स्वयम्भुवः। यथा च तैर्व्याप्तमिदं त्रैलोक्यं सचराचरम् ॥ ६८ ॥**
**भृग्वादीनामृषीणाञ्च प्रजासर्गोपवर्णनम्। वसिष्ठस्य च ब्रह्मर्षेर्यत्र गोत्रानुकीर्त्तनम् ॥ ६९ ॥**
**अग्नेः प्रजायाः सम्भूतिः स्वाहायां यत्र कीर्त्तिता। पितृणां द्विप्रकाराणांस्वधायास्तदनन्तरम् ॥ ७० ॥**
**पितृवंशप्रसङ्गेन कीर्त्त्यते च महेश्वरात्। दक्षस्य शापः सत्यर्थे भृग्वादीनाञ्च धीमताम् ॥ ७१ ॥**
**प्रतिशापश्च रुद्रस्य दक्षाददद्भुतकर्मणः। प्रतिषेधश्च वैरस्य कीर्त्यते यत्र विस्तरात् ॥ ७२ ॥**
**तेषां नियोगो द्वीपेषु देशेषु च पृथक् पृथक्। स्वायम्भुवस्य सर्गस्य ततश्चाप्यनुकीर्त्तनम् ॥ ७३ ॥**
**उक्तो नाभेर्निसर्गश्च रजसश्च महात्मनः। द्वीपानां ससमुद्राणां पर्वतानाञ्च कीर्त्तनम् ॥ ७४ ॥**
**वर्षाणाञ्च नदीनाञ्च तद्भेदानाञ्च सर्वशः। द्वीपभेदसहस्त्राणामन्तर्भेदश्च सप्तसु ॥ ७५ ॥**
**विस्तरान् मण्डलाच्चैव जम्बूद्वीपसमुद्रयोः। प्रमाणं योजनाग्रेण कीर्त्त्यते पर्वतैः सह ॥ ७६ ॥**
**हिमवान् हेमकूटस्तु निषधो मेरुरेव च। नीलः श्वेतः शृङ्गवांश्च कीर्त्त्यन्ते वर्षपर्वताः ॥ ७७ ॥**
**तेषामन्तरविष्कम्भा उच्छ्रायायामविस्तराः। कीर्त्त्यन्ते योजनाग्रेण ये च तत्र निवासिनः ॥ ७८ ॥**

---

और निरामय ब्रह्म का भी वर्णन किया गया है। मोक्षार्थी ब्राह्मणों के लिए योगेश्वर ने योगब्रह्म का आख्यान दिया है एवं रुद्र के भाग्यशाली अवतार का भी वर्णन किया गया है। तीनों वेदों की कथा, ब्रह्मा और नारायण के बीच की वार्ता एवं वहाँ एक स्तोत्र भी उल्लिखित है। इन दोनों की स्तुति से देवेश भगवान् शिव परम सन्तुष्ट हुए और ब्रह्मा के शरीर में महात्मा रुद्र का आविर्भाव हुआ। महामना रुद्र के रुदन का कारण, उसका तथा रुद्र आदि आठों नाम स्वयंभू के क्यों पड़े इत्यादि विषयों का उल्लेख है और यह सचराचर जगत् उनसे किस प्रकार ओतप्रोत है उसका कारण बताया गया है ॥ ६३-६८ ॥

भृगु आदि ऋषियों के प्रजासर्ग का वर्णन है। ब्रह्मर्षि वशिष्ठ के गोत्र का वर्णन किया गया है तथा अग्नि का स्वाहा से प्रजासर्ग भी वर्णित है। पितृ-वंश के प्रसंग में पितरों के दो प्रकार, उसके बाद स्वधा का वर्णन किया गया है। महेश्वर का सती के लिए दक्ष तथा भृगु आदि को शाप देना एवं दक्ष का भी रुद्र को प्रतिशाप देने का वर्णन है। दोषारोपण, वैर का प्रतिषेध एवं मन्वन्तर के प्रसंग से काल के ज्ञान का वर्णन है ॥ ६९-७२ ॥

इसके बाद वे सब अलग-अलग किन-किन द्वीपों और देशों में गए फिर स्वायंभुव सर्ग का वर्णन है। नाभि तथा महात्मा रजस का सर्ग, इसके साथ ही समुद्रों, द्वीपों और पर्वतों इत्यादि का वर्णन, वर्षों, नदियों तथा उन सबके भेद एवं सातों द्वीपों के सहस्त्रों भेदोपभेद वर्णित हैं ॥ ७३-७५ ॥

योजनमान से जम्बूद्वीप और समुद्र के विस्तार तथा उनके मण्डल तथा पर्वतों के साथ योजन-मान से उनका प्रमाण वर्णित है। हिमवान्, हेमकूट, निषध, मेरु, नील, श्वेत और शृङ्गवान् ये वर्ष-पर्वत के नाम से प्रसिद्ध हैं। इनका परिमाप तथा इनके बीच के विष्कम्भों का परिमाण भी योजन में दिया गया है। इनमें निवास करने वालों

**भारतादीनि वर्षाणि नदीभिः पर्वतैस्तथा । भूतैश्चोपनिविष्टानि गतिमद्भिर्ध्रुवैस्तथा ॥ ७९ ॥**
**जम्बूद्वीपादयो द्वीपाः समुद्रैः सप्तभिर्वृताः । ततश्चाप्यम्मयी भूमिर्लोकालोकश्च कीर्त्यते ॥ ८० ॥**
**अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी । भूरादयश्च कीर्त्यन्ते वरणैः प्रकृतैः सह ॥ ८१ ॥**
**सर्वञ्च तत् प्रधानस्य परिमाणैकदेशिकम् । सव्यासपरिमाणञ्च संक्षेपेणैव कीर्त्यते ॥ ८२ ॥**
**सूर्याचन्द्रमसोश्चैव पृथिव्याश्चाप्यशेषतः । प्रमाणं योजनाग्रेण साम्प्रतैरभिमानिभिः ॥**
**महेन्द्राद्याः सभाः पुण्या मानसोत्तरमूर्द्धनि ॥ ८३ ॥**
**अत ऊर्द्ध्वं गतिश्चोक्ता स्वर्गस्यालातचक्रवत् । नागवीथ्यजवीथ्योश्च लक्षणं परिकीर्त्यते ॥ ८४ ॥**
**काष्ठयोर्लेखयोश्चैव मण्डलानाञ्च योजनैः । लोकालोकस्य सन्ध्याया अह्नो विषुवतस्तथा ॥ ८५ ॥**
**लोकपालाः स्थिताश्चोर्द्ध्वं कीर्त्यन्ते ये चतुर्दिशम् । पितॄणां देवतानां च पन्थानौ दक्षिणोत्तरौ ॥ ८६ ॥**
**गृहिणां न्यासिनाञ्चोक्तौ रजःसत्त्वसमाश्रयात् । कीर्त्यते च पदं विष्णोर्धर्माद्या यत्र धिष्ठिताः ॥ ८७ ॥**
**सूर्याचन्द्रमसोश्चारो ग्रहाणां ज्योतिषां तथा । कीर्त्यते ध्रुवसामर्थ्यात् प्रजानां च शुभाशुभम् ॥ ८८ ॥**
**ब्रह्मणा निर्मितः सौरः स्यन्दनोऽर्थवशात् स्वयम् । कीर्त्यते भगवान् येन प्रसर्पति दिवि स्वयम्॥ ८९ ॥**
**स रथोऽधिष्ठितो देवैरादित्यैर्ऋषिभिस्तथा । गन्धर्वैरप्सरोभिश्च ग्रामणीसर्पराक्षसैः ॥ ९० ॥**
**अपां सारमयस्येन्दोः कीर्त्यते च रथस्तथा । वृद्धिक्षयौ च सोमस्य कीर्त्येते सूर्यकारितौ ॥ ९१ ॥**

---

का भी वर्णन किया गया है ॥ ७६-७८ ॥

भारत विभिन्न प्रकार के चल-अचल नदियों, पर्वतों तथा प्राणियों से भरा है । जम्बूद्वीप आदि द्वीपों के चारों ओर सात समुद्र हैं और जलमयी भूमि व लोकालोक का वर्णन किया गया है । भूः, भुवः आदि सात लोक तथा सप्तद्वीपमयी यह पृथ्वी अपने-अपने नैसर्गिक प्राकारों के साथ इस ब्रह्माण्ड के बीच स्थित है ॥ ७९-८१ ॥

इनमें जो प्रधान हैं उनका एकदेशिक परिमाण इनके व्यासों के प्रमाण के साथ संक्षेप में वर्णित किया गया है । सूर्य, चन्द्रमा एवं पृथ्वी—इन तीनों का एतत्कालीन मान प्रमाण के साथ योजन में परिमाण तथा मानस के उत्तरी दिशा में शिखर पर महेन्द्र आदि की पुण्य सभाओं का वर्णन है ॥ ८२-८३ ॥

आलातचक्र की भाँति स्वर्ग की ऊर्द्ध्व गति का वर्णन किया गया है । नागवीथी तथा अजवीथी के लक्षणों का उल्लेख कर योजन में मण्डलों की काष्ठा और लेखाओं का मान बताया गया है । लोकालोक, सन्ध्या, दिन और विषुवत् का वर्णन भी किया गया है और पुनः चारों दिशाओं में लोकपालों की स्थिति बताई गई है । पितरों और देवताओं के लिए दक्षिण एवं उत्तर मार्ग का विवरण प्रस्तुत है ॥ ८४-८६ ॥

रजोगुण व सत्त्वगुण के माध्यम से गृहस्थों तथा संन्यासियों के कर्म का विवेचन है । धर्म के निवास स्थान अर्थात् श्रीविष्णु का धाम एवं सूर्य-चन्द्रमा तथा ग्रह-नक्षत्रों की चाल भी बतायी गयी है । ध्रुव की सामर्थ्य, प्रजाओं के शुभ-अशुभ की विवेचना तथा प्रयोजनवश ब्रह्मा द्वारा निर्मित सूर्य के रथ का वर्णन किया गया है । स्वयं भगवान् आकाश में जिस रथ से विचरण करते हैं और जिस रथ पर देवता, ऋषि, गन्धर्व, अप्सराएँ, ग्रामणी, साँप और राक्षस आदि सवारी करते हैं उस रथ का वर्णन है ॥ ८७-९० ॥

इसके साथ ही जल के देवता चन्द्रमा के रथ का भी वर्णन किया गया है । सूर्य के कारण चन्द्रमा की

